Scanned



ओं नमः परमात्मने ।

छायासुवर्चलाम्बासमेत श्रीसूर्यनारायणस्वामिने नमः ।

# सूर्यनमस्कारमन्त्रप्रश्नः ॥

## (तैत्तिरीयारण्यके प्रथमः प्रश्नः)

नवग्रहमन्त्रसहितः

सस्वरः ।

द्वितीयावृत्तिः

श्रीवाणीविलासमुद्रणालयः, श्रीरङ्गम् ।

1971

मू० 1-25

# THE WORKS OF SRI SANKARACHARYA

(20 Volumes Crown 8 Vo.)

UNDER REPRINT in 12 Volumes

**Each Volume Rs. 6/– (Postage Extra)**

***Now Ready!***

**Vol. III UPANISHAD BHASHYA** pp. 373 + 36
—Vol. I. Containing Isa, Kena, Katha, Taittiriya and Mundakopanishad Bhashyas.

**Vol. IV UPANISHAD BHASHYA** pp. 355 + 22
—Vol. II. Containing Prasna, Mandukya, Aitareya, Nrisimha Purva Tapaniya, Upanishad Bhashyas.

**Vol. V CHHANDOGYA UPANISHAD BHASHYA** pp. 481 + 18

**Vol. VI Brihadaranyakopanishad Bhashya Part I**

**Vol. VIII GITA BHASHYAM** pp. 492 + 42

**Vol. IX LAGHU BHASHYAS** pp. 440 + 22
—Vishnusahasranama. Sanatsujatiya, Hastamalakiya, Adhyatmapatala and Lalita Trisati Bhashyas.

**Vol. XI Stotras & Minor Prakaranas**
pp. 582 + 18 containing 89 Stotras. 3rd Edn.

**Vol. X MAJOR PRAKARANAS** pp. 578 + 40
—Vivekachudamani, Upadesasahasri, Sarvavedantasiddhantasarasangraha, Aparokshanubhuti, Atmabodha, Panchikaranam Prabodhasudhakara, Satasloki & Svatmanirupanam.
3rd Edn. (Under Press)

**Please order your requirements immediately.**

---

***For copies apply to:—***

**Sri Vani Vilas Press, Srirangam, Tiruchi-6.**

॥ श्रीः ॥

ओं नमः परमात्मने ।

छायासुवर्चलांबासमेत श्रीसूर्यनारायणस्वामिने नमः ।

# ॥ सूर्यनमस्कारप्रश्नः ॥



## (तैत्तिरीयारण्यके प्रथमः प्रश्नः)

सस्वरः ।

ॐ

# तैत्तिरीयारण्यके प्रथमः प्रश्नः ॥

ओम्। भद्रं कर्णेभिः शृणुयाम देवाः। भद्रं पश्येमाक्षभिर्यजत्राः। स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिः। व्यशेम देवहितं यदायुः। स्वस्ति न इन्द्रो वृद्धश्रवाः। स्वस्ति नः पूषा विश्ववेदाः। स्वस्ति नस्ताक्ष्र्यो अरिष्टनेमिः। स्वस्ति नो बृहस्पतिर्दधातु। ओं शान्तिः शान्तिः शान्तिः॥

ओं भद्रं कर्णेभिः शृणुयाम देवाः। भद्रं पश्येमाक्षभिर्यजत्राः। स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिः। व्यशेम देवहितं यदायुः। स्वस्ति न इन्द्रो वृद्धश्रवाः। स्वस्ति नः पूषा विश्ववेदाः। स्वस्ति नस्ताक्ष्र्यो अरिष्टनेमिः। स्वस्ति नो बृहस्पतिर्दधातु। आपमापामपः सर्वाः। अस्मादस्मादितोऽमुतः ॥ १ ॥

अग्निर्वायुश्च सूर्यश्च। सहसंचस्करर्द्धिया। वाय्वश्वा रश्मिपतयः। मरीच्यात्मानो अद्रुहः। देवीर्भुवनसूवरीः।

पुत्रवत्वायॅ मे सुत। महानाम्नीर्महामानाः। महसो मॅहसः-
स्स्वॅः। देवीः पॅर्जन्यसूवॅरीः। पुत्रवत्वायॅ मे सुत॥ २॥

अपाऽन्युॅष्णिमपा रक्षॅः। अपाऽन्युॅष्णिमपारघॅम्।
अपाघ्रामपॅ चावर्तिम्। अपॅदेवीरितो हित। वज्रं देवीरजी-
ताᳩश्च। भुवॅनं देवसूवॅरीः। आदित्यानदितिं देवीम्।
योनिनोर्ध्वमुदीषॅत। शिवानश्शन्तॅमा भवन्तु। दिव्या आप
ओषॅधयः। सुमृडीका सरॅस्वति। मा ते व्योम संदृशि॥ ३॥

श्रीछायासुवर्चलांबासमेत श्रीसूर्यनारायणस्वामिने नमः।

ओं नमो नारायणाय॥ १॥

स्मृतिः प्रत्यक्षॅमैतिह्यम्। अनुॅमानश्चतुष्टयम्। एतैरादित्य-
मण्डलम्। सर्वैरेव विधास्यते। सूर्यो मरीचिमादॅत्ते।
सर्वस्माद्भुवॅनादधि। तस्याः पाकविशेषेण। स्मृतं कॉल-
विशेषॅणम्। नदीव प्रभॅवात्काचित्। अक्षय्यात्स्यन्दते यॅथा॥

तान्नद्योऽभिसॅमायन्ति। सोरुस्सती न निवर्तते।
एवन्नानासॅमुत्थानाः। कालास्संवत्सरᳩश्रिताः। अणुशश्च

मॅहश्श्च । सर्वँ समवृयन्त्वितम् । सतैस्सर्वैस्संमाव्रिष्टः । ऊुरुस्सॅव निवर्तते । अधिसंवत्सॅरं विद्यात् । तदेव लक्षुणे ॥ ५ ॥

अणुभिश्च मॅहद्भिश्च । सुमारूढः प्रदृश्यॅते । संवत्सरः प्रॅत्यक्षेण । नाधिसॅत्वः प्रदृश्यते । पटरॊ विक्लिधः पिङ्गः । एतद्वॅरुणुलक्षॅणम् । यत्रैतॅदुपदृश्यॅते । सुहस्रं तत्र नीयॅते । एकॅं हि शिरो नॉना मुखे । कृत्स्नं तॅदृतुलक्षॅणम् ॥ ६ ॥

उभयतस्सप्तेन्द्रियाणि । जुल्पितं त्वेव दिह्यॅते । शुक्ल-कृष्णे संवॅत्सरुस्य । दक्षिणवामॅयोः पार्श्वयोः । तस्यैषा भवॅति । शुक्रं तॆ अन्यद्यॅजतं तॆ अन्यत् । विषुॅरूपे अहॅनी द्यौरिॅवासि । विश्वा हि माया अवॅसि स्वधावः । भद्रा तॆ पूषन्निह रातिरस्त्विॅति । नात्र भुवॅनम् । न पूषा । न पुशवः । नादित्यस्संवत्सर एव प्रत्यक्षेण प्रियतॅमं विद्यात् । एतद्वै संवत्सरस्य प्रियतॅमॅं रूपम् । योऽस्य महानर्थ उत्पत्स्यमॉनो भवति । इदं पुण्यं कुॅरुष्वेति । तमाहॅरणं दद्यात् ॥ ७ ॥

श्रीछायासुवर्चलांबासमेत श्रीसूर्यनारायणस्वामिने नमः ।

ओं नमो नारायणाय ॥ २ ॥

साकंजानाꣳसप्तथमाहुरेकजम् । षडिद्यमा ऋषयो देवजा इति । तेषामिष्टानि विहितानि धामशः । स्थात्रे रेजन्ते विकृतानि रूपशः । को नु मर्या अमिथितः । सखा सखायमब्रवीत् । जहाको अस्मदीषते । यस्तित्याज सखिविदꣳ सखायम् । न तस्य वाच्यपि भागो अस्ति । यदीꣳश्रृणोत्यलकꣳश्रृणोति ॥ ८ ॥

न हि प्रवेद सुकृतस्य पन्थामिति । ऋतुरृतुना नुद्यमानः । विननादाभिधावः । षष्टिश्च त्रिꣳशका वल्गाः । शुक्लकृष्णौ च षाष्टिकौ । सारागवस्त्रैर्जरदक्षः । वसन्तो वसुभिस्सह । संवत्सरस्य सवितुः । प्रैषकृत्प्रथमः स्मृतः । अमूनादयतेत्यन्यान् ॥ ९ ॥

अमूꣳश्च परिरक्षतः । एता वाचः प्रयुज्यन्ते । यत्रैतदुपदृश्यते । एतदेव विजानीयात् । प्रमाणं कालपर्यये । विशेषणं तु वक्ष्यामः । ऋतूनां तन्निबोधत । शुक्लवासा रुद्रगणः । ग्रीष्मेणाऽऽवर्तते सह । निजहन् पृथिवीꣳसर्वाम् ॥

ज्योतिषाऽप्रतिख्येन सः । विश्वरूपाणि वासाꣳसि । आदित्यानां निबोधत । संवत्सरीणं कर्मफलम् । वर्षाभि-

र्दृता॑ꣳसह । अद्दुःखो॑ दुःखच॑क्षुरि॒व । तद्मा॑ पीत इ॒व दृश्य॑ते । शीतेनाव्यथ॑यन्नि॒व । रु॒रुद॑क्ष इ॒व दृश्य॑ते । ह्लादय॑ते ज्वल॑तश्चै॒व । शा॒म्यत॑श्चास्य॒ चक्षु॑षी । या वै प्रजा भ्र॑ꣳश्य॒न्ते । सं॒वत्सरात्ता भ्र॑ꣳश्य॒न्ते । य॒ाः प्रति॑तिष्ठ॒न्ति । संवत्सरे ताः प्रति॑तिष्ठ॒न्ति । व॒र्षाभ्य॑ इत्य॒र्थः ॥ ११ ॥

श्रीछायासुवर्चलांबासमेत श्रीसूर्यनारायणस्वामिने नमः ।
ओं नमो नारायणाय ॥ ३ ॥

अक्षि॑दुःखोत्थि॑तस्यै॒व । वि॒प्रस॑न्ने क॒नीनि॑के । आङ्क्ते॑ चाद्र॑णं न॒ास्ति । ऋ॒भूणां॑ तन्नि॒बोध॑त । क॒नक॒ाभानि॑ वास॒ाꣳसि । अ॒हता॑नि न्नि॒बोध॑त । अन्नमश्नीत॑ मृज्मी॒त । अ॒हं वो॑ जीव॒नप्र॑दः । ए॒ता वा॒चः प्र॑युज्य॒न्ते । श॒रद्य॑त्रोप॒दृश्य॑ते ॥ १२ ॥

अभिधून्वन्तोऽभिघ्न॑न्त इ॒व । वा॒तव॑न्तो म॒रुद्ग॑णाः । अमुतो जेतुमिषुमु॑खमि॒व । सन्नद्धास्सह द॑दृशे॒ ह । अपध्वस्तै॑र्वस्तिव॑र्णैरि॒व । वि॒शि॒खास॑ः कप॒र्दिनः । अक्रुद्धस्य योत्स्य॑मान॒स्य । क्रुद्धस्ये॑व॒ लोहि॑नी । हेमतश्च॑क्षुषी वि॒द्यात् । अ॒क्ष्णयो॑ क्षिप॒णोरि॑व ॥ १३ ॥

दुर्भिक्षं देवलोकेषु। मनूनामुदकं गृहे। एता वाचः प्रवदन्तीः। वैद्युतो यान्ति शैशिरीः। ता अग्निः पवमाना अन्वैक्षत। इह जीविकामपरिपश्यन्। तस्यैषा भवति। इहेह-वस्स्वतपसः। मरुतस्सूर्यत्वचः। शर्म सप्रथा आवृणे॥ १४॥

श्रीछायासुवर्चलांबासमेत श्रीसूर्यनारायणस्वामिने नमः।
ओं नमो नारायणाय॥ ४॥

अतिताम्राणि वासाँसि। अष्टिवज्रिशतघ्नि च। विश्वे देवा विप्रहरन्ति। अग्निजिह्वा असश्चत। नैव देवो न मर्त्यः। न राजा वरुणो विभुः। नाग्निर्नेन्द्रो न पवमानः। मातृक्कच्चन विद्यते। दिव्यस्यैका धनुरार्त्निः। पृथिव्यामपरा श्रिता॥ १५॥

तस्येन्द्रो वम्रिरूपेण। धनुर्ज्यामच्छिनथ्स्वयम्। तदिन्द्र-धनुरित्यज्यम्। अभ्रवर्णेषु चक्षते। एतदेव शंयोर्बार्हस्पत्यस्य। एतद्रुद्रस्य धनुः। रुद्रस्य त्वेव धनुरार्त्निः। शिर उत्पिपेष। स प्रवर्ग्योऽभवत्। तस्माद्यस्सप्रवर्ग्येण यज्ञेन यजते। रुद्रस्य स शिरः प्रतिदधाति। नैनꣳरुद्र आरुको भवति। य एवं वेद॥ १६॥

श्रीछायासुवर्चलांबासमेत श्रीसूर्यनारायणस्वामिने नमः।
ओं नमो नारायणाय॥ ५॥

अ॒त्यू॒र्ध्वा॒क्षोऽति॑रश्चात् । शिशि॑रः प्र॒दृश्य॑ते । नैव रू॒पं न॑ वासा॒ꣳ॒सि । न चक्षु॑ः प्रति॒दृश्य॑ते । अ॒न्योन्यं॒ तु न॑ हि॒ꣳ॒स्रा॒तः । स॒तस्त॑द्दे॒वल॑क्षणम् । लोहि॑तोऽक्ष्णि शा॑रशी॒र्ष्णिः । सू॒र्यस्यो॑द॒यनं॑ प्र॑ति । त्वं क॑रोषिन्यञ्ज॒लिकाम् । त्वं॒ क॑रोषि नि॒जानु॑काम् ॥ १७ ॥

निजा॒नुका मे॑न्यञ्ज॒लिका । अमी वाच॒मुपास॑ता॒मिति । तस्मै सर्व॑ ऋ॒तवो॑ नम॒न्ते । मर्यादाक॒रत्वात्प्र॑पु॒रोधाम् । ब्राह्म॑ण आ॒प्नोति । य ए॑वं वे॒द । स खलु संवत्सर एतैस्सेना॑नीभिस्स॒ह । इन्द्राय सर्वान् कामा॑नभि॒वहति । स द्र॒प्सः । तस्यै॒षा भव॑ति ॥

अव॑द्र॒प्सो अ॒ꣳ॒शुमती॑मतिष्ठत् । इ॒या॒नः कृ॒ष्णो द॒शभि॑ः स॒हस्रै॑ः । आव॒र्तमिन्द्र॒ः शच्या॒ धम॑न्तम् । उपस्तुहि तं नृमणामथ॑द्रा॒मिति । एतयै॑वेन्द्रः सलावृ॑क्या स॒ह । असुरान् प॑रिवृ॒श्चति । पृथि॑व्य॒ꣳ॒शुम॑ती । ता॒मन्वव॑स्थितः संवत्स॒रो दि॒वं च॑ । नैवं॑विद्वषाऽऽचार्यान्तेवा॒सिनौ । अन्योन्यस्मै द्रुह्या॒ताम् । यो द्रुह्यति । भ्रश्यते स्व॑र्गाल्लो॒कात् । इत्यृतुम॑ण्डला॒नि ।

सूर्यमण्डलान्याख्यायिकाः । अत ऊर्ध्वं सनिर्वचनाः ॥ १९ ॥

श्रीछायासुवर्चलांबासमेत श्रीसूर्यनारायणस्वामिने नमः ।

ओं नमो नारायणाय ॥ ६ ॥

आरोगो भ्राजः पटरः पतङ्गः । स्वर्णरो ज्योतिषीमान् विभासः । ते अस्मै सर्वे दिवमातपन्ति । ऊर्जं दुहाना अनपस्फुरन्त इति । कश्यपोऽष्टमः । स महामेरुं न जहाति । तस्यैषा भवति । यत्ते शिल्पं कश्यप रोचनावत् । इन्द्रियावत्पुष्कलं चित्रभानु । यस्मिन्सूर्या अर्पितास्सप्त साकम् ॥ २० ॥

तस्मिन् राजानमधिविश्रयेममिति । ते अस्मै सर्वे कश्यपाज्ज्योतिर्लभन्ते । तान्सोमः कश्यपादधिनिर्द्धमति । भ्रस्ताकर्मकृदिवैवम् । प्राणो जीवानीन्द्रियजीवानि । सप्त शीर्षण्याः प्राणाः । सूर्या इत्याचार्याः । अपश्यमहमेतान्सप्त सूर्यानिति । पञ्चकर्णो वात्स्यायनः । सप्तकर्णश्च प्लाक्षिः ॥

आनुश्रविक एव नौ कश्यप इति । उभौ वेदयिते । न हि शेकुमिव महामेरुं गन्तुम् । अपश्यमहमेतत्सूर्यमण्डलं परि-

वॅर्तमानम् । गार्ग्यः प्रॉणत्रातः । गच्छन्त मॅहामेरुम् । एकं चाजहतम् । आजपटरपतॅङ्गा निहने । तिष्ठन्नॉतपन्ति । तस्मॉ-दिह तप्तिॅतपाः ॥ २२ ॥

अमुत्रेतरे । तस्मॉदिहातप्तिॅतपाः । तेषॉमेषा भवॅति । सप्त सूर्या दिवमनुप्रविष्टाः । तानन्वेति पथिभिर्दक्षिणावान् । ते अस्मै सर्वे घृतमॉतपन्ति । ऊर्जं दुहाना अनपस्फुरॅन्त इति । सप्तर्त्विजस्सूर्या इॅत्याचार्याः । तेषॉमेषा भवॅति । सप्त दिशो नानॉसूर्याः ॥ २३ ॥

सप्त होतॉर ऋत्विजॅः । देवा आदित्यॉ ये सप्त । तेभिः सोमाभीरक्षण इति । तदॅप्याम्नायः । दिग्भ्राज ऋतून् करोति । एतॅयैवावृता सहस्रसूर्यताया इति वैशंपायनः । तस्यैषा भवॅति । यद्द्यावॅ इन्द्र ते शतॅ्शतं भूमीः । उत स्युः । नत्वॉ वज्रिन्थ्सहस्र्ँसूर्याः ॥ २४ ॥

अनुनजातमष्ट रोदॅसी इति । नानालिङ्गत्वादृतूनां नानॉ सूर्यत्वम् । अष्टौ तु व्यवसिता इति । सूर्यमण्डलान्यष्टॉत

ऊर्ध्वम् । तेषॉमेषा भवॅति । चित्रं देवानामुदॅगादनीकम् । चक्षुर्मित्रस्य वरुॅणस्याग्नेः । आप्रा द्यावॉपृथिवी अन्तरिॅक्षम् । सूर्य आत्मा जगतस्तस्थुॅषश्चेति ॥ २५ ॥

श्रीछायासुवर्चलांबासमेत श्रीसूर्यनारायणस्वामिने नमः ।

ओं नमो नारायणाय ॥ ७ ॥

क्वेदमभ्रंनिविशते । क्वायॅंसंवत्सरो मिॅथः । क्वाहः क्वेयन्देॅव रात्री । क्व मासा ऋॅतवः श्रिताः । अर्द्धमासॉ मुहूर्ताः । निमेषास्त्रुॅटिभिस्सह । क्वेमा आपो निॅविशन्ते । यदीतॉ यान्ति संप्रॅति । काला अप्सु निॅविशन्ते । आपस्सूर्ये समाहिॅताः ॥ २६ ॥

अभ्राण्यपः प्रॅपद्यन्ते । विद्युत्सूर्ये समाहिॅता । अनवर्णे इमे भूमी । इयं चॉऽसौ च रोदॅसी । किंस्विदत्रान्तॅरा भूतम् । येनेमे विधृॅते उभे । विष्णुनॉ विधृॅते भूमी । इति वॅत्सस्य वेदॅना । इरॉवती धेनुमती हि भूतम् । सूयवसिनी मनुॅषे दशस्ये ॥ २७ ॥

व्यष्टम्नाद्रोदसी विष्णवेते । दाधर्थ पृथिवीमभितो मयूखैः। किन्तद्विष्णोर्बलमाहुः। का दीप्तिः किं परायणम्। एको यद्धारयद्देवः। रेजती रोदसी उभे। वाताद्विष्णोर्बलमाहुः। अक्षराद्दीप्तिरुच्यते। त्रिपदाद्धारयद्देवः। यद्विष्णोरेकमुत्तमम्॥

अग्नयो वायवश्चैव। एतदस्य परायणम्। पृच्छामि त्वा परं मृत्युम्। अवमं मध्यमञ्चतुम्। लोकञ्च पुण्यपापानाम्। एतत्पृच्छामि संप्रति। अमुमाहुः परं मृत्युम्। पवमानं तु मध्यमम्। अग्निरेवावमो मृत्युः। चन्द्रमाश्चतुरुच्यते ॥२९॥

अनाभोगाः परं मृत्युम् । पापास्संयन्ति सर्वदा। आभोगास्त्वेवं संयन्ति। यत्र पुण्यकृतो जनाः। ततो मध्यममायन्ति। चतुमग्निं च संप्रति। पृच्छामि त्वा पापकृतः। यत्र यातयते यमः। त्वन्नस्तद्ब्रह्मन् प्रब्रूहि। यदि वेत्थाऽसतो गृहान् ॥ ३० ॥

कश्यपादुदितास्सूर्याः। पापान्निर्घ्नन्ति सर्वदा। रोदस्योरन्तर्देशेषु। तत्र न्यस्यन्ते वासवैः। तेऽशरीराः प्रपद्यन्ते।

यथाऽपुण्यस्य कर्मणः । अपाण्यपादकेशासः । तत्र तेऽयोनिजा जनाः । मृत्वा पुनर्मृत्युमापद्यन्ते । अद्यमानास्स्वकर्मभिः ॥

आशातिकाः क्रिमय इव । ततः पूयन्ते वासवैः । अपैतं मृत्युं जयति । य एवं वेद । स खल्वैवंविद्ब्राह्मणः । दीर्घश्रुत्तमो भवति । कश्यपस्यातिथिस्सिद्धगमनस्सिद्धागमनः । तस्यैषा भवति । आ यस्मिन्थ्सप्त वासवाः । रोहन्ति पूर्व्या रुहः ॥ ३२ ॥

ऋषिरिह दीर्घश्रुत्तमः । इन्द्रस्य घर्मो अतिथिरिति । कश्यपः पश्यको भवति । यत्सर्वं परिपश्यतीति सौक्ष्म्यात् । अथाग्नेरष्टपुरुषस्य । तस्यैषा भवति । अग्ने नय सुपथा राये अस्मान् । विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनः । भूयिष्ठान्ते नम उक्तिं विधेमेति ॥ ३३ ॥

श्रीछायासुवर्चलांबासमेत श्रीसूर्यनारायणस्वामिने नमः ।

ओं नमो नारायणाय ॥ ८ ॥

अग्निश्च जातवेदाश्च । सहोजा अजिराप्रभुः । वैश्वानरो नर्यापाश्च । पङ्क्तिराधाश्च सप्तमः । विसर्पेवाऽष्टमोऽग्नीनाम् ।

एतेऽष्टौ वसवः क्षिता इति । यथर्त्वेवाग्नेरर्चिर्वर्णविशेषाः । नीलार्चिश्च पीतकार्चिश्चेति । अथ वायोरेकादशपुरुषस्यैकादशं-स्त्रीकस्य । प्रभ्राजमाना व्यवदाताः ॥ ३४ ॥

याश्च वासुकिवैद्युताः । रजताः परुषाः श्यामाः । कपिला अतिलोहिताः । ऊर्ध्वा अवपतन्ताश्च । वैद्युत इत्ये-कादश । नैनं वैद्युतो हिनस्ति । य एवं वेद । स होवाच व्यासः पाराशर्यः । विद्युद्वधमेवाहं मृत्युमैच्छमिति । न त्वका-मꣳहन्ति ॥ ३५ ॥

य एवं वेद । अथ गन्धर्वगणाः । स्वानभ्राट् । अंघारि-र्बंभारिः । हस्तस्सुहस्तः । कृशानुर्विश्वावसुः । मूर्धन्वा-न्थ्सूर्यवर्चाः । कृतिरित्येकादश गन्धर्वगणाः । देवाश्च महादेवाः । रश्मयश्च देवा गरगिरः ॥ ३६ ॥

नैनं गरो हिनस्ति । य एवं वेद । गौरीमिमाय सलिलानि तक्षती । एकपदी द्विपदी सा चतुष्पदी । अष्टापदी नवपदी बभूवुषी । सहस्राक्षरा परमे व्योमन्निति । वाचो

विशेषणम् । अथ निगदव्याख्याताः । ताननुक्रमिष्यामः । वराहवस्स्वतपसः ॥ ३७ ॥

विद्युन्महसो धूपयः । श्वापयो गृहमेधाश्चेत्येते । ये चेमेऽशिमिविद्विषः । पर्जन्यास्सप्त पृथिवीमभिवर्षन्ति । वृष्टिभिरिति । एतयैव विभक्तिविपरीताः । सप्तभिर्वातैरुदीरिताः । अमून् लोकानभिवर्षन्ति । तेषामेषा भवति । समानमेतदुदकम् ॥ ३८ ॥

उच्चैत्यवचाहभिः । भूमिं पर्जन्या जिन्वन्ति । दिवं जिन्वन्त्यग्नय इति । यदक्षरं भूतकृतम् । विश्वे देवा उपासते । महर्षिमस्य गोप्तारम् । जमदग्निमकुर्वत । जमदग्निराप्यायते । छन्दोभिश्चतुरुत्तरैः । राज्ञस्सोमस्य तृप्तासः ॥ ३९ ॥

ब्रह्मणा वीर्यावता । शिवा नः प्रदिशो दिशः । तच्छंयोरावृणीमहे । गातुं यज्ञाय । गातुं यज्ञपतये । दैवीस्वस्तिरस्तु नः । स्वस्तिर्मानुषेभ्यः । ऊर्ध्वं जिगातु भेषजम् ।

शन्नों अस्तु द्विपदे॑। शं चतु॑ष्पदे। सोमपा (३) असोमपा (३)
इति निगदॅव्याख्याताः ॥ ४० ॥

श्रीछायासुवर्चलांवासमेत श्रीसूर्यनारायणस्वामिने नमः।
ओं नमो नारायणाय ॥ ९ ॥

सहस्रवृदियं भूमिः। परं व्योम सहस्रवृत्। अश्विना
भुज्यू नासत्या। विश्वस्य॑ जगतस्प॑ती। जाया भूमिः पति-
र्व्योम। मिथुनन्ता अतुर्य॑थुः। पुत्रो बृहस्प॑ती रुद्रः। सरमा
इति स्त्रीपुमम्। शुक्रं वा॑मन्यद्यजतं वा॑मन्यत्। विषु॑रूपे अह॑नी
द्यौरि॑व स्थः ॥ ४१ ॥

विश्वा हि माया अवथः स्वधावन्तौ। भद्रा वां पूषणा-
विह रातिर॑स्तु। वासात्यौ चित्रौ जग॑तो निधानौं। द्यावा-
भूमी चरथः सꣳसखा॑यौ। तावश्विना॑ रासभाश्वा हवं मे।
शुभस्पती आगतꣳसूर्यया॑ सह। त्युग्रोह भुज्युम॑श्विनोदमेघे।
रयिन्न कश्चिन्ममृवां (२) अवाहाः। तमूहथुर्नौभिरात्मन्वतीभिः।
अन्तरिक्षप्रुद्भिरपोदकाभिः ॥ ४२ ॥

तिस्रः क्षपस्त्रिरहातिव्रजद्भिः । नासत्या भुज्युमूहथुः पतङ्गैः । समुद्रस्य धन्वन्नार्द्रस्य पारे । त्रिभीरथैश्शतपद्भिः षडश्वैः । सवितारं वितन्वन्तम् । अनुबध्नाति शांबरः । आपपूर्ष्पंबरश्चैव । सवितारेपसोऽभवत् । त्यꣳसुतृप्तं विदित्वैव । बहुसोम गिरं वशी ॥ ४३ ॥

अन्वेति तुग्रो वक्रियान्तम् । आयसूयान्थ्सोमतृप्सुषु । स सङ्ग्रामस्तमोद्योऽत्योतः । वाचो गाः पिपाति तत् । स तद्गोभिस्स्तवाऽत्येत्यन्ये । रक्षसानन्विताश्च ये । अन्वेति परिवृत्यास्तः । एवमेतौ स्थो अश्विना । ते एते द्युःपृथिव्योः । अहरहर्गर्भन्दधाथे ॥ ४४ ॥

तयोरेतौ वथ्सावहोरात्रे । पृथिव्या अहः । दिवो रात्रिः । ता अविसृष्टौ । दम्पती एव भवतः । तयोरेतौ वथ्सौ । अग्निश्चादित्यश्च । रात्रेर्वथ्सः । श्वेत आदित्यः । अह्नोऽग्निः ॥४५॥

ताम्रो अरुणः । ता अविसृष्टौ । दम्पती एव भवतः । तयोरेतौ वथ्सौ । वृत्रश्च वैद्युतश्च । अग्नेर्वृत्रः । वैद्युत आदि-

त्यस्यँ । ता अविसृष्टौ । दम्पॅती एव भॅवतः । तयोरेतौ
वृथ्सौ ॥ ४६ ॥

उष्मा चॅ नीहारश्चॅ । वृत्रस्योष्मा । वैद्युतस्यॅ नीहारः ।
तौ तावेव प्रतिपद्येते । सेयॅ्रात्री गर्भिणी पुत्रेण संवॅसति ।
तस्या वा एतदुल्बणंम् । यद्रात्रौ रश्मयॅः । यथा गोर्गर्भिण्यॉ
उल्बणंम् । एवमेतस्यॉ उल्बणंम् । प्रजायिष्णुः प्रजया च
पशुभिश्च भवति । य एॅवं वेद । एतमुद्यन्तमपियॅन्तं चेति ।
आदित्यः पुण्यॅस्य वृथ्सः । अथ पवित्राङ्गिरसः ॥ ४७ ॥

श्रीछायासुवर्चलांबासमेत श्रीसूर्यनारायणस्वामिने नमः ।

ओं नमो नारायणाय ॥ १० ॥

पवित्रॅवन्तः परिवाजमासॅते । पितैषां प्रत्नो अभिरॅक्षति
व्रतम् । महस्सॅमुद्रं वरुॅणस्तिरोदॅधे । धीरॉ इच्छेकुर्धरुॅणेष्वारभॅम् ।
पवित्रॅं ते विततं ब्रह्मॅणस्पते । प्रभुर्गात्रॉणि पर्येषि विश्वतः ।
अतॅप्ततनूर्न तदामो अॅश्नुते । शृतास इद्वहॅन्तस्तत्समॉशत ।
ब्रह्मा देवानाम् । असॅतस्सद्ये ततॅक्षुः ॥ ४८ ॥

ऋषयस्सप्ताऽत्रिश्च यत् । सर्वेऽत्रयो अगस्त्यश्च । नक्षत्रैश्शंकृतोऽवसन् । अथ सवितुः श्यावाश्वस्याऽवर्तिकामस्य । अमी य ऋक्षा निहितास उच्चा । नक्तं ददृश्रे कुहचिद्दिवेयुः । अदब्धानि वरुणस्य व्रतानि । विचाकशच्चन्द्रमा नक्षत्रमेति । तत्सवितुर्वरेण्यम् । भर्गो देवस्य धीमहि ॥ ४९ ॥

धियो यो नः प्रचोदयात् । तत्सवितुर्वृणीमहे । वयन्देवस्य भोजनम् । श्रेष्ठꣳसर्वधातमम् । तुरं भगस्य धीमहि । अपागूहत सविता तृभीन् । सर्वान्दिवो अन्धसः । नक्तन्तान्यभवन्दृशे । अस्थ्यस्थ्ना संभविष्यामः । नाम नामैव नाम मे ॥ ५० ॥

नपुꣳसकं पुमाꣳस्त्र्यस्मि । स्थावरोऽस्म्यथ जङ्गमः । यजेऽयक्षि यष्टाहे च । मया भूतान्ययक्षत । पशवो मम भूतानि । अनूबन्ध्योऽस्म्यहं विभुः । स्त्रियस्सतीः । ता उ मे पुꣳस आहुः । पश्यदक्षण्वान्नविचेतदन्धः । कविर्यः पुत्रस्स इमा चिकेत ॥ ५१ ॥

यस्ता विज्ञानाथ्सॅवितुः पिता सॅत्। अन्धो मणिमॅवि-न्दत्। तमॅनङ्गुलिरावॅयत्। अग्रीवः प्रत्यॅमुञ्चत्। तमजिह्वा असश्चॅत। ऊर्ध्वमूलमॅवाक्छाखम्। वृक्षं यों वेद सम्प्रॅति। न स जातु जनॅः श्रद्दध्यात्। मृत्युर्मा मारयादिॅतिः। हसितꣳ रुदितं गीतम्॥ ५२॥

वीणॉपणवलासितम्। मृतञ्जीवं चॅ यत्किंचित्। अङ्गानि स्नेव विद्धि तत्। अतॅृष्यॅस्तृष्यॅ ध्यायत्। असाञ्जाता मे मिथू चरन्। पुत्रो निर्ऋत्यॉ वैदेहः। अचेतॉ यश्च चेतॅनः। स तं मणिमॅविन्दत्। सॉऽनंगुलिरावॅयत्। सोऽग्रीवः प्रत्यॅमुञ्चत्॥ ५३॥

सोऽजिह्वो असश्चॅत। नैतमृषिं विदित्वा नगॅरं प्रविशेत्। यॅदि प्रविशेत्। मिथौ चरित्वा प्रविशेत्। तथ्सम्भवॅस्य व्रतम्। आतमॅग्ने रथन्तिष्ठ। एकाश्वमेकयोजॅनम्। एकचक्रमेकधुरम्। वातध्रॉजिगतिं विभो। न रिष्यति न व्यथते॥ ५४॥

नास्याक्षो यातु सज्जति। यच्छ्वेतान्रोहिताꣳश्चाग्नेः। रथे युक्त्वाऽधितिष्ठति। एकया च दशभिश्च स्वभूते। द्वाभ्यामिष्टये विꣳशत्या च। तिसृभिश्च वहसे त्रिꣳशता च। नियुद्भिर्वायविह ता विमुञ्च ॥ ५५ ॥

श्रीछायासुवर्चलांबासमेत श्रीसूर्यनारायणस्वामिने नमः।

ओं नमो नारायणाय ॥ ११ ॥

आतनुष्व प्रतनुष्व। उद्धमाऽऽधम सन्धम। आदित्ये चन्द्रवर्णानाम्। गर्भमाधेहि यः पुमान्। इतस्सिक्तꣳसूर्यगतम्। चन्द्रमसे रसङ्कृधि। वारादञ्जनयाग्रेऽग्निम्। य एको रुद्र उच्यते। असङ्ख्यातास्सहस्राणि। स्मर्यते न च दृश्यते ॥५६॥

एवमेतन्निबोधत। आमन्द्रैरिन्द्र हरिभिः। याहि मयूररोमभिः। मा त्वा केचिन्नियेमुरिन्न पाशिनः। दधन्वेव ता इहि। मा मन्द्रैरिन्द्र हरिभिः। यामि मयूररोमभिः। मा मा केचिन्नियेमुरिन्न पाशिनः। निधन्वेव तां (२) इमि। अणुभिश्च महद्भिश्च ॥ ५७ ॥

निघृष्वैरसमायुतैः । कालैर्हरित्वमापन्नैः । इन्द्रायाहि सहस्रयुक् । अग्निर्विभ्राष्टिवसनः । वायुश्वेतसिकद्रुकः । संवथ्सरो विषूवर्णैः । नित्यास्तेऽनुचरास्तव । सुब्रह्मण्योऽँसुब्रह्मण्योऽँ सुब्रह्मण्योम् । इन्द्रागच्छ हरिव आगच्छ मेधातिथेः । मेष वृषणश्वस्य मेने ॥ ५८ ॥

गौरावस्कन्दिन्नहल्यायै जार । कौशिकब्राह्मण गौतमंब्रुवाण । अरुणाश्वा इहागताः । वसवः पृथिविक्षितः । अष्टौ दिग्वाससोऽग्नयः । अग्निश्च जातवेदाश्चेत्येते । ताम्राश्वास्ताम्रस्थाः । ताम्रवर्णास्तथाऽसिताः । दण्डहस्ताः खादग्दतः । इतो रुद्राः पराङ्गताः ॥ ५९ ॥

उक्तꣳ स्थानं प्रमाणञ्च पुर इत । बृहस्पतिश्च सविता च । विश्वरूपैरिहागताम् । रथेनोदकवर्त्मना । अप्सुषा इति तद्द्वयोः । उक्तो वेषो वासाꣳसि च । कालावयवानामितः प्रतीच्या । वासात्या इत्यश्विनोः । कोऽन्तरिक्षे शब्दङ्करोतीति । वासिष्ठो रौहिणो मीमाꣳसाञ्चक्रे । तस्यैषा भवति ।

वाश्चैव विद्युदिति। ब्रह्मण उदरणमसि। ब्रह्मण उदीरणमसि।
ब्रह्मण आस्तरणमसि। ब्रह्मण उपस्तरणमसि ॥ ६० ॥

श्रीछायासुवर्चलांबासमेत श्रीसूर्यनारायणस्वामिने नमः।
ओं नमो नारायणाय ॥ १२ ॥

अष्टयोनीमष्टपुत्राम् । अष्टपत्नीमिमां महीम्। अहं
वेद न मे मृत्युः। नचामृत्युरघाहरत्। अष्टयोन्यष्टपुत्रम्।
अष्टपद्दिदमन्तरिक्षम्। अहं वेद न मे मृत्युः। नचामृत्यु-
रघाऽहरत्। अष्टयोनीमष्टपुत्राम्। अष्टपत्नीममून्दिवम् ॥ ६१ ॥

अहं वेद न मे मृत्युः। नचामृत्युरघाऽहरत्। सुत्रा-
माणं महीमूषु । अदितिर्द्यौरदितिरन्तरिक्षम् । अदितिर्माता
स पिता स पुत्रः। विश्वे देवा अदितिः पञ्चजनाः। अदिति-
र्जातमदितिजनित्वम्। अष्टौ पुत्रासो अदितेः। ये जातास्तन्वः
परि। देवां (२) उपप्रैत्सप्तभिः ॥ ६२ ॥

परा मार्ताण्डमास्यत्। सप्तभिः पुत्रैरदितिः। उपप्रैत्पूर्व्यं
युगम्। प्रजायै मृत्यवे तत्। परा मार्ताण्डमाभरदिति।

तानुक्रमिष्यामः। मित्रश्च वरुणश्च। धाता चार्यमा च। अंशश्च भगश्च। इन्द्रश्च विवस्वाँश्चेत्येते। हिरण्यगर्भो हंसश्शुचिषत्। ब्रह्मजज्ञानं तदित्पदमिति। गर्भः प्राजापत्यः। अथ पुरुषः सप्त पुरुषः॥ ६३॥

श्रीछायासुवर्चलांबासमेत श्रीसूर्यनारायणस्वामिने नमः।
ओं नमो नारायणाय॥ १३॥

योऽसौ तपन्नुदेति। स सर्वेषां भूतानां प्राणानादायोदेति। मा मे प्रजाया मा पशूनाम्। मा मम प्राणानादायोदगाः। असौ योऽस्तमेति। स सर्वेषां भूतानां प्राणानादायाऽस्तमेति। मा मे प्रजाया मा पशूनाम्। मा मम प्राणानादायाऽस्तङ्गाः। असौ य आपूर्यति। स सर्वेषां भूतानां प्राणैरापूर्यति॥ ६४॥

मा मे प्रजाया मा पशूनाम्। मम मम प्राणैरापूरिष्ठाः। असौ योऽपक्षीयति। स सर्वेषां भूतानां प्राणैरपक्षीयति। मा मे प्रजाया मा पशूनाम्। मा मम प्राणैरपक्षेष्ठाः। अमूनि नक्षत्राणि। सर्वेषां भूतानां प्राणैरपप्रसर्पन्ति चोत्सर्पन्ति च।

मा मे प्रजाया मम पशूनाम् । मा मम प्राणैरपप्रसृपत मोथ्सृपत ॥ ६५ ॥

इमे मासाश्चार्धमासाश्च । सर्वेषां भूतानां प्राणैरपप्रसर्पन्ति चोथ्सर्पन्ति च । मा मे प्रजाया मा पशूनाम् । मा मम प्राणैरपप्रसृपत मोथ्सृपत । इम ऋतवः । सर्वेषां भूतानां प्राणैरपप्रसर्पन्ति चोथ्सर्पन्ति च । मा मे प्रजाया मा पशूनाम् । मा मम प्राणैरपप्रसृपत मोथ्सृपत । अयꣳ संवथ्सरः । सर्वेषां भूतानां प्राणैरपप्रसर्पति चोथ्सर्पति च ॥ ६६ ॥

मा मे प्रजाया मा पशूनाम् । मा मम प्राणैरपप्रसृप मोथ्सृप । इदमहः । सर्वेषां भूतानां प्राणैरपप्रसर्पति चोथ्सर्पति च । मा मे प्रजाया मा पशूनाम् । मा मम प्राणैरपप्रसृप मोथ्सृप । इयꣳ रात्रिः । सर्वेषां भूतानां प्राणैरपप्रसर्पति चोथ्सर्पति च । मा मे प्रजाया मा पशूनाम् । मा मम प्राणैरपप्रसृप मोथ्सृप । ओं भूर्भुवस्स्वः । एतद्वो मिथुनं मानो मिथुनꣳ रीढ्वम् ॥ ६७ ॥

श्रीछायासुवर्चलांबासमेत श्री सूर्यनारायणस्वामिने नमः ।

ओं नमो नारायणाय ॥ १४ ॥

अथादित्यस्याष्टपुरुषस्य । वसूनामादित्यानाꣳस्थाने स्व-तेजसा भानि । रुद्राणामादित्यानाꣳ स्थाने स्वतेजसा भानि। आदित्यानामादित्यानाꣳस्थाने स्वतेजसा भानि । सताꣳ सत्यानाम् । आदित्यानाꣳ स्थाने स्वतेजसा भानि । अभि-धून्वतामभिघ्नताम् । वातवतां मरुताम् । आदित्यानाꣳ स्थाने स्वतेजसा भानि । ऋभूणामादित्यानाꣳ स्थाने स्वतेजसा भानि । विश्वेषान्देवानाम् । आदित्यानाꣳ स्थाने स्वतेजसा भानि । संवथ्सरस्य सवितुः । आदित्यस्य स्थाने स्वतेजसा भानि । ओं भूर्भुवस्स्वः । रश्मयो वो मिथुनं मानो मिथुनꣳ रीढ्वम् ॥ ६८ ॥

श्रीछायासुवर्चलांबासमेत श्रीसूर्यनारायणस्वामिने नमः ।
ओं नमो नारायणाय ॥ १५ ॥

आरोगस्य स्थाने स्वतेजसा भानि । भ्राजस्य स्थाने स्वतेजसा भानि । पटरस्य स्थाने स्वतेजसा भानि । पतङ्गस्य स्थाने स्वतेजसा भानि । स्वर्णरस्य स्थाने स्व-तेजसा भानि । ज्योतिषीमतस्य स्थाने स्वतेजसा भानि ।

विभासस्य स्थाने स्वतेजॅसा भानि। कश्यपस्य स्थाने स्वतेजॅसा भानि। ओं भूर्भुवस्स्वॅः। आपो वो मिथुनं मा नो मिथुन ँ॒ रीद्वम् ॥ ६९ ॥

श्रीछायासुवर्चलांबासमेत श्री सूर्यनारायणस्वामिने नमः।

ओं नमो नारायणाय ॥ १६ ॥

अथ वायोरेकादशपुरुषस्यैकादशॅस्त्रीकस्य। प्रभ्राजमानाना ँ॒ रुद्राणा ँ॒ स्थाने स्वतेजॅसा भानि। व्यवदाताना ँ॒ रुद्राणा ँ॒ स्थाने स्वतेजॅसा भानि। वासुकिवैद्युताना ँ॒ रुद्राणा ँ॒ स्थाने स्वतेजॅसा भानि। रजताना ँ॒ रुद्राणा ँ॒ स्थाने स्वतेजॅसा भानि। परुषाणा ँ॒ रुद्राणा ँ॒ स्थाने स्वतेजॅसा भानि। श्यामाना ँ॒ रुद्राणा ँ॒ स्थाने स्वतेजॅसा भानि। कपिलाना ँ॒ रुद्राणा ँ॒ स्थाने स्वतेजॅसा भानि। अतिलोहिताना ँ॒ रुद्राणा ँ॒ स्थाने स्वतेजॅसा भानि। ऊर्ध्वाना ँ॒ रुद्राणा ँ॒ स्थाने स्वतेजॅसा भानि ॥ ७० ॥

अवपतन्ताना ँ॒ रुद्राणा ँ॒ स्थाने स्वतेजॅसा भानि। वैद्युताना ँ॒ रुद्राणा ँ॒ स्थाने स्वतेजॅसा भानि। प्रभ्राजमानीना ँ॒ रुद्राणीना ँ॒ स्थाने स्वतेजॅसा भानि। व्यवदातीना ँ॒ रुद्राणीना ँ॒-

स्थाने स्वतेजॅसा भानि। वासुकिवैद्युतीनाꣳ रुद्राणीनाꣳ स्थाने स्वतेजॅसा भानि। रजतानाꣳरुद्राणीनाꣳस्थाने स्वतेजॅसा भानि। परुषाणाꣳरुद्राणीनाꣳस्थाने स्वतेजॅसा भानि। श्यामानाꣳ-रुद्राणीनाꣳस्थाने स्वतेजॅसा भानि। कपिलानाꣳरुद्राणीनाꣳ-स्थाने स्वतेजॅसा भानि। अतिलोहितीनाꣳरुद्राणीनाꣳस्थाने स्वतेजॅसा भानि। ऊर्ध्वानाꣳरुद्राणीनाꣳस्थाने स्वतेजॅसा भानि। अवपतन्तीनाꣳरुद्राणीनाꣳस्थाने स्वतेजॅसा भानि। वैद्युतीनाꣳ रुद्राणीनाꣳस्थाने स्वतेजॅसा भानि। ओं भूर्भुवस्स्वॅः। रूपाणि वो मिथुनं मा नो मिथुॅनꣳ रीढ्वम् ॥ ७१ ॥

श्रीछायासुवर्चलांबासमेत श्रीसूर्यनारायणस्वामिने नमः।
ओं नमो नारायणाय ॥ १७ ॥

अथाग्नेरष्टपुॅरुषस्य। अग्नेः पूर्वदिश्यस्य स्थाने स्वतेजॅसा भानि। जातवेदस उपदिश्यस्य स्थाने स्वतेजॅसा भानि। सहोजसो दक्षिणदिश्यस्य स्थाने स्वतेजॅसा भानि। अजिराप्रभव उपदिश्यस्य स्थाने स्वतेजॅसा भानि। वैश्वानरस्याऽपरादिश्यस्य स्थाने स्वतेजॅसा भानि। नर्यापस उपदिश्यस्य

स्थाने स्वतेजॅसा भ्रानि। पङ्क्तिराधस उदग्दिश्यस्य स्थाने स्वतेजॅसा भ्रानि। विसर्पिण उपदिश्यस्य स्थाने स्वतेजॅसा भ्रानि। ओं भूर्भुवस्स्वॅः। दिशो चो मिथुनं मा नो मिथुॅनꣳ रीढ्वम्॥ ७२॥

श्रीछायासुवर्चलांबासमेत श्रीसूर्यनारायणस्वामिने नमः।

ओं नमो नारायणाय॥ १८॥

दक्षिणपूर्वस्यान्दिशि विसॅर्पी नरकः। तस्मान्नः पॅरिपाहि। दक्षिणापरस्यान्दिश्यविसॅर्पी नरकः। तस्मान्नः पॅरिपाहि। उत्तरपूर्वस्यान्दिशि विषॉदी नरकः। तस्मान्नः पॅरिपाहि। उत्तरापरस्यान्दिश्यविषॉदी नरकः। तस्मान्नः पॅरिपाहि। आ यस्मिन्थ्सप्त वासवा इन्द्रियाणि शतक्रतॅ-वित्येते॥ ७३॥

श्रीछायासुवर्चलांबासमेत श्रीसूर्यनारायणस्वामिने नमः।

ओं नमो नारायणाय॥ १९॥

इन्द्रघोषा वो चसॅुभिः पुरस्तादुपॅदधताम्। मनो-जवसो वः पितृभिर्दक्षिणत उपॅदधताम्। प्रचेता वो रुद्रैः पश्चादुपॅदधताम्। विश्वकॅर्मा व आदित्यैरॅत्तरत उपॅदध-

ताम् । त्वष्टा वो रूपैरुपरिष्टादुपदधताम् । संज्ञानं वः पश्चादिति । आदित्यस्सर्वोऽग्निः पृथिव्याम् । वायुरन्तरिक्षे । सूर्यो दिवि । चन्द्रमा दिक्षु । नक्षत्राणि स्वलोके । एवा ह्येव । एवा ह्यग्ने । एवा हि वायो । एवा हीन्द्र । एवा हि पूषन् । एवा हि देवाः ॥ ७४ ॥

श्रीछायासुवर्चलांबासमेत श्री सूर्यनारायणस्वामिने नमः ।

ओं नमो नारायणाय ॥ २० ॥

आपमापामपस्सर्वाः । अस्मादस्मादितोऽमुतः । अग्निर्वायुश्च सूर्यश्च । सह सञ्चस्करर्द्धिया । वाय्वश्वा रश्मिपतयः । मरीच्यात्मानो अद्रुहः । देवीर्भुवनसूवरीः । पुत्रवत्त्वाय मे सुत । महानाम्नीर्महामानाः । महसो महसस्स्वः ॥ ७५ ॥

देवीः पर्जन्यसूवरीः । पुत्रवत्त्वाय मे सुत । अपाऽश्न्युष्णिमपारक्षः । अपाऽश्न्युष्णिमपारघम् । अपाघ्रामपचाऽवर्तिम् । अपदेवीरितो हित । वज्रन्देवीरजीता ँश्च । भुवनन्देवसूवरीः । आदित्यानदितिन्देवीम् । योनिनोर्ध्वमुदीषत ॥

भद्रङ्कर्णेभिः शृणुयाम देवाः । भद्रं पश्येमाऽक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिः । व्यशेम देवहितं यदायुः । स्वस्ति न इन्द्रो वृद्धश्रवाः । स्वस्ति नः पूषा विश्ववेदाः । स्वस्तिनस्तार्क्ष्यो अरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु । केतवो अरुणासश्च । ऋषयो वातरशनाः । प्रतिष्ठाꣳशतधा हि । समाहितासो सहस्रधायसम् । शिवा नश्शन्तमा भवन्तु । दिव्या आप ओषधयः । सुमृडीका सरस्वति । मा ते व्योम सन्दृशि ॥ ७७ ॥

श्रीछायासुवर्चलांबासमेत श्रीसूर्यनारायणस्वामिने नमः ।

ओं नमो नारायणाय ॥ २१ ॥

योऽपां पुष्पं वेद । पुष्पवान् प्रजावान् पशुमान् भवति । चन्द्रमा वा अपां पुष्पम् । पुष्पवान् प्रजावान् पशुमान् भवति । य एवं वेद । योऽपामायतनं वेद । आयतनवान् भवति । अग्निर्वा अपामायतनम् । आयतनवान् भवति । योऽग्नेरायतनं वेद ॥ ७८ ॥

आयतॅनवान् भवति । आपो वा अग्नेरायतॅनम् । आयतॅनवान् भवति । य एवं वेदॅ । योऽपामायतॅनं वेदॅ । आयतॅनवान् भवति । वायुर्वा अपामायतॅनम् । आयतॅनवान् भवति । यो वायोरायतॅनं वेदॅ । आयतॅनवान् भवति ॥ ७९ ॥

आपो वै वायोरायतॅनम् । आयतॅनवान् भवति । य एवं वेदॅ । योऽपामायतॅनं वेदॅ । आयतॅनवान् भवति । असौ वै तपॅन्नपामायतॅनम् । आयतॅनवान् भवति । योऽमुष्य तपॅत आयतॅनं वेदॅ । आयतॅनवान् भवति । आपो वा अमुष्य तपॅत आयतॅनम् ॥ ८० ॥

आयतॅनवान् भवति । य एवं वेदॅ । योऽपामायतॅनं वेदॅ । आयतॅनवान् भवति । चन्द्रमा वा अपामायतॅनम् । आयतॅनवान् भवति । यश्चन्द्रमॅस आयतॅनं वेदॅ । आयतॅनवान् भवति । आपो वै चन्द्रमॅस आयतॅनम् । आयतॅनवान् भवति ॥ ८१ ॥

य एवं वेदॅ । योऽपामायतॅनं वेदॅ । आयतॅनवान् भवति । नक्षॅत्राणि वा अपामायतॅनम् । आयतॅनवान् भवति ।

यो नक्षत्राणामायतनं वेद । आयतनवान् भवति । आपो वै नक्षत्राणामायतनम् । आयतनवान् भवति । य एवं वेद ॥८३॥

योऽपामायतनं वेद । आयतनवान् भवति । पर्जन्यो वा अपामायतनम् । आयतनवान् भवति । यः पर्जन्यस्यायतनं वेद । आयतनवान् भवति । आपो वै पर्जन्यस्याऽऽयतनम् । आयतनवान् भवति । य एवं वेद । योऽपामायतनं वेद ॥

आयतनवान् भवति । संवथ्सरो वा अपामायतनम् । आयतनवान् भवति । यस्संवथ्सरस्यायतनं वेद । आयतनवान् भवति । आपो वै संवथ्सरस्यायतनम् । आयतनवान् भवति । य एवं वेद । योऽप्सु नावं प्रतिष्ठितां वेद । प्रत्येव तिष्ठति ॥ ८४ ॥

इमे वै लोका अप्सु प्रतिष्ठिताः । तदेषाऽभ्यनूक्ता । अपाꣳरसमुदयꣳसन् । सूर्ये शुक्रꣳसमाभृतम् । अपाꣳरसस्य यो रसः । तं वो गृह्णाम्युत्तममिति । इमे वै लोका अपाꣳरसः ।

तेऽमुष्मिन्नादित्ये समाभृताः । जानुदघ्नीमुत्तरवेदीङ्खात्वा । अपां पूरयित्वा गुल्फदघ्नम् ॥ ८५ ॥

पुष्करपर्णैः पुष्करदण्डैः पुष्करैश्च सꣳस्तीर्य । तस्मिन्विहायसे । अग्निं प्रणीयोपसमाधाय । ब्रह्मवादिनो वदन्ति । कस्मात्प्रणीतेऽयमग्निश्चीयते । साप्रणीतेऽयमप्सु ह्ययञ्चीयते । असौ भुवनेऽप्यनाहिताग्निरेताः । तमभित एता अबीष्टका उपदधाति । अग्निहोत्रे दर्शपूर्णमासयोः । पशुबन्धे चातुर्मास्येषु ॥ ८६ ॥

अथो आहुः । सर्वेषु यज्ञक्रतुष्विति । एतद्ध स्म वा आहुश्शण्डिलाः । कमग्निञ्चिनुते । सत्रियमग्निञ्चिन्वानः । संवथ्सरं प्रत्यक्षेण । कमग्निञ्चिनुते । सावित्रमग्निञ्चिन्वानः । अमुमादित्यं प्रत्यक्षेण । कमग्निञ्चिनुते ॥ ८७ ॥

नाचिकेतमग्निञ्चिन्वानः । प्राणान्प्रत्यक्षेण । कमग्निञ्चिनुते । चातुर्होत्रियमग्निञ्चिन्वानः । ब्रह्म प्रत्यक्षेण । कमग्निञ्चिनुते । वैश्वसृजमग्निञ्चिन्वानः । शरीरं प्रत्यक्षेण । कमग्निञ्चिनुते । उपानुवाक्यमाशुमग्निञ्चिन्वानः ॥ ८८ ॥

इमान् लोकान्प्रत्यक्षेण । कमग्निञ्चिनुते । इममारुण-केतुकमग्निञ्चिन्वान इति । य एवासौ । इतश्चाऽमुतश्चाऽव्यतीपाती । तमिति । योऽग्नेर्मिथूया वेद । मिथुनवान्भवति । आपो वा अग्नेर्मिथूयाः । मिथुनवान्भवति । य एवं वेद ॥

श्रीछायासुवर्चलांबासमेत श्रीसूर्यनारायणस्वामिने नमः ।
ओं नमो नारायणाय ॥ २२ ॥

आपो वा इदमासन्त्सलिलमेव । स प्रजापतिरेकः पुष्करपर्णे समभवत् । तस्यान्तर्मनसि कामस्समवर्तत । इद ँ सृजेयमिति । तस्माद्यत्पुरुषो मनसाभिगच्छति । तद्वाचा वदति । तत्कर्मणा करोति । तदेषाऽभ्यनूक्ता । कामस्तदग्रे समवर्तताधि । मनसो रेतः प्रथमं यदासीत् ॥ ९० ॥

सतो बन्धुमसति निरविन्दन् । हृदि प्रतीष्या कवयो-मनीषेति । उपैनन्तदुपनमति । यत्कामो भवति । य एवं वेद । स तपोऽतप्यत । स तपस्तप्त्वा । शरीरमधूनुत । तस्य यन्मा ँ समासीत् । ततोऽरुणाः केतवो वातरशना ऋषय उद-तिष्ठन् ॥ ९१ ॥

ये नखाः। ते वैखानसाः । ये वालाः। ते वाल-खिल्याः। यो रसः। सोऽपाम्। अन्तरतः कूर्मं भूतꣳसर्पन्तम्। तमब्रवीत्। मम वै त्वङ्माꣳसा। समभूत्॥ ९२॥

नेत्यब्रवीत्। पूर्वमेवाहमिहासमिति। तत्पुरुषस्य पुरुष-त्वम्। स सहस्रशीर्षा पुरुषः। सहस्राक्षस्सहस्रपात्। भूत्वोद-तिष्ठत्। तमब्रवीत्। त्वं वै पूर्वꣳसमभूः। त्वमिदं पूर्वः कुरुष्वेति। स इत आदायापः॥ ९३॥

अञ्जलिना पुरस्तादुपादधात्। एवाह्येवेति। ततं आदित्य उदतिष्ठत्। सा प्राची दिक्। अथारुणः केतु-र्दक्षिणत उपादधात्। एवाह्यग्न इति। ततो वा अग्निरुदतिष्ठत्। सा दक्षिणा दिक्। अथारुणः केतुः पश्चादुपादधात्। एवाहि वायो इति॥ ९४॥

ततो वायुरुदतिष्ठत्। सा प्रतीची दिक्। अथारुणः केतुरुत्तरत उपादधात्। एवाहीन्द्रेति। ततो वा इन्द्र उद-

तिष्ठत् । सोदीची दिक् । अथारुणः केतुर्मध्य उपादधात् । एवाहि पूषन्निति । ततो वै पूषोदतिष्ठत् । सेयन्दिक् ॥ ९५ ॥

अथारुणः केतुरुपरिष्टादुपादधात् । एवाहि देवा इति । ततो देवमनुष्याः पितरः । गन्धर्वाप्सरसश्चोदतिष्ठन् । सोर्ध्वा दिक् । या विप्रुषो विपरापतन् । ताभ्योऽसुरा रक्षाꣳसि पिशाचाश्चोदतिष्ठन् । तस्मात्ते पराभवन् । विप्रुड्भ्यो हि ते समभवन् । तद्वेषाभ्यनूक्ता ॥ ९६ ॥

आपो ह यद्बृहतीर्गर्भमायन् । दक्षन्दधाना जनयन्तीस्स्वयंभुम् । तत इमेऽध्यसृज्यन्त सर्गाः । अद्भ्यो वा इदꣳ समभूत् । तस्मादिदꣳ सर्वं ब्रह्म स्वयंभ्विति । तस्मादिदꣳ सर्वꣳ शिथिलमिवाऽध्रुवमिवाभवत् । प्रजापतिर्वाव तत् । आत्मनात्मानं विधाय । तदेवानुप्राविशत् । तद्वेषाभ्यनूक्ता ॥ ९७ ॥

विधाय लोकान् विधाय भूतानि । विधाय सर्वाः प्रदिशो दिशश्च । प्रजापतिः प्रथमजा ऋतस्य । आत्म-

नात्मानमभिसंविवेशेति । सर्वमेवेदमाप्त्वा । सर्वमवरुद्ध्य । तदेवानुप्रविशति । य एवं वेद ॥ ९८ ॥

श्रीछायासुवर्चलांबासमेत श्रीसूर्यनारायणस्वामिने नमः ।
ओं नमो नारायणाय ॥ २३ ॥

चतुष्टय्य आपो गृह्णाति । चत्वारि वा अपाꣳरूपाणि । मेघो विद्युत् । स्तनयित्नुर्वृष्टिः । तान्येवावरुन्धे । आतपति वर्ष्या गृह्णाति । ताः पुरस्तादुपदधाति । एता वै ब्रह्मवर्चस्या आपः । मुखत एव ब्रह्मवर्चसमवरुन्धे । तस्मान्मुखतो ब्रह्म-वर्चसितरः ॥ ९९ ॥

कूप्या गृह्णाति । ता दक्षिणत उपदधाति । एता वै तेजस्विनीरापः । तेज एवास्य दक्षिणतो दधाति । तस्मा-द्दक्षिणोऽर्धस्तेजस्वितरः । स्थावरा गृह्णाति । ताः पश्चादुप-दधाति । प्रतिष्ठिता वै स्थावराः । पश्चादेव प्रतितिष्ठति । वहन्तीर्गृह्णाति ॥ १०० ॥

ता उत्तरत उपदधाति । ओजसा वा एता वहन्ती-रिवोद्गतीरिव आकूजतीरिव धावन्तीः । ओज एवास्योत्तरतो

दँधाति। तस्मादुत्तरोऽर्धं ओजस्वितरः। संभार्या गृह्णाति। ता मध्य उपदधाति। इयं वै संभार्याः। अस्यामेव प्रतितिष्ठति। पल्वल्या गृह्णाति। ता उपरिष्टादुपादधाति ॥ १०१ ॥

असौ वै पल्वल्याः। अमुष्यामेव प्रतितिष्ठति। द्विक्षूपदधाति। द्विक्षु वा आपः। अन्नं वा आपः। अद्भ्यो वा अन्नञ्जायते। यदेवाद्भ्योऽन्नञ्जायते। तदवरुन्धे। तं वा एतमरुणाः केतवो वातरशना ऋषयोऽचिन्वन्। तस्मादारुणकेतुकः ॥ १०२ ॥

तदेषाभ्यनूक्ता। केतवो अरुणासश्च। ऋषयो वातरशनाः। प्रतिष्ठाꣳशतधाहि। समाहितासो सहस्रधायसमिति। शतशश्चैव सहस्रशश्च प्रतितिष्ठति। य एतमग्निञ्चिनुते। य उचैनमेवं वेद ॥ १०३ ॥

श्रीछायासुवर्चलांबासमेत श्री सूर्यनारायणस्वामिने नमः।

ओं नमो नारायणाय ॥ २४ ॥

जानुदघ्नीमुत्तरवेदीङ्खात्वा। अपां पूरयति। अपाꣳसर्वत्वाय। पुष्करपर्णꣳ रुक्मं पुरुषमित्युपदधाति। तपो वै

पुष्करपर्णम् । सत्यꣳ रुक्मः । अमृतं पुरुषः । एतावद्वा वाऽस्ति । यावदेतत् । यावदेवाऽस्ति ॥ १०४ ॥

तदवरुन्धे । कूर्ममुपदधाति । अपामेव मेध्यमवरुन्धे । अथो स्वर्गस्य लोकस्य समष्ट्यै । आपमापामपस्सर्वाः । अस्मादस्मादितोऽमुतः । अग्निर्वायुश्च सूर्यश्च । सहसञ्चस्करर्द्धिया इति । वाय्वश्वा रश्मिपतयः । लोकं पृणाच्छिद्रं पृण ॥ १०५ ॥

यास्तिस्रः परमजाः । इन्द्रघोषा वो वसुभिरेवाह्येवेति । पञ्चचित्तय उपदधाति । पाङ्क्तोऽग्निः । यावानेवाग्निः । तञ्चिनुते । लोकं पृणया द्वितीयामुपदधाति । पञ्चपदा वै विराट् । तस्या वा इयं पादः । अन्तरिक्षं पादः । द्यौः पादः । दिशः पादः । परोरजाः पादः । विराज्येव प्रतितिष्ठति । य एतमग्निञ्चिनुते । य उ चैनमेवं वेद ॥ १०६ ॥

श्रीछायासुवर्चलासमेत श्रीसूर्यनारायणस्वामिने नमः ।

ओं नमो नारायणाय ॥ २५ ॥

अग्निं प्रणीयोपसमाधाय । तमभित एता अबीष्टका उपदधाति । अग्निहोत्रे दर्शपूर्णमासयोः । पशुबन्धे चातु-

र्म्रस्येषु । अथो आहुः । सर्वेषु यज्ञक्रतुष्विति । अर्थ हस्माहारुणस्स्वायंभुवः । सावित्रस्सर्वोऽग्निरित्यनंनुषङ्गं मन्यामहे । नाना वा एतेषां वीर्याणि । कमग्निश्चिनुते ॥ १०७ ॥

सत्रियमग्निं श्चिन्वानः । कमग्निश्चिनुते । सावित्रमग्निश्चिन्वानः । कमग्निश्चिनुते । नाचिकेतमग्निश्चिन्वानः । कमग्निश्चिनुते । चातुर्होत्रियमग्निश्चिन्वानः । कमग्निश्चिनुते । वैश्वसृजमग्निश्चिन्वानः । कमग्निश्चिनुते ॥ १०८ ॥

उपानुवाक्यमाशुमग्निश्चिन्वानः । कमग्निश्चिनुते । इममारुणकेतुकमग्निश्चिन्वान इति । वृषा वा अग्निः । वृषाणौ सङ्स्फालयेत् । हन्येतास्य यज्ञः । तस्मान्नानुषज्यः । सोत्तरवेदिषु क्रतुषु चिन्वीत । उत्तरवेद्याङ्ह्यग्निश्चीयते । प्रजाकामश्चिन्वीत ॥ १०९ ॥

प्राजापत्यो वा एषोऽग्निः । प्राजापत्याः प्रजाः । प्रजावान् भवति । य एवं वेद । पशुकामश्चिन्वीत । संज्ञानं वा एतत्पशूनाम् । यदापः । पशूनामेव संज्ञानेऽग्निश्चिनुते । पशुमान् भवति । य एवं वेद ॥ ११० ॥

वृष्टिकामश्चिन्वीत। आपो वै वृष्टिः। पर्जन्यो वर्षुको भवति। य एवं वेद। आमयावी चिन्वीत। आपो वै भेषजम्। भेषजमेवास्मै करोति। सर्वमायुरेति। अभिचरँश्चिन्वीत। वज्रो वा आपः॥ १११॥

वज्रमेव भ्रातृव्येभ्यः प्रहरति। स्तृणुत एनम्। तेजस्कामो यशस्कामः। ब्रह्मवर्चसकामस्स्वर्गकामश्चिन्वीत। एतावद्वा वास्ति। यावदेतत्। यावदेवास्ति। तदवरुन्धे। तस्यैतद्व्रतम्। वर्षति न धावेत्॥ ११२॥

अमृतं वा आपः। अमृतस्यानन्तरित्यै। नाप्सु मूत्रपुरीषङ्कुर्यात्। न निष्ठीवेत्। न विवसनस्स्नायात्। गुह्यो वा एषोऽग्निः। एतस्याग्नेरनतिदाहाय। न पुष्करपर्णानि हिरण्यं वाऽधितिष्ठेत्। एतस्याग्नेरनभ्यारोहाय। न कूर्मस्याश्नीयात्। नोदकस्याघातुकान्येनमोदकानि भवन्ति। अघातुका आपः। य एतमग्निञ्चिनुते। य उचैनमेवं वेद॥ ११३॥

श्रीछायासुवर्चलासमेत श्रीसूर्यनारायणस्वामिने नमः।

ओं नमो नारायणाय॥ २६॥

इ॒मानु॑कं॒ भुव॑ना सीषधेम । इन्द्र॑श्च॒ विश्वे॑ च दे॒वाः । य॒ज्ञश्च॑ नस्त॒न्वञ्च॑ प्र॒जाञ्च॑ । आ॒दि॒त्यैरिन्द्र॑स्स॒ह सीषधातु । आ॒दि॒त्यैरिन्द्र॒स्सग॑णो म॒रुद्भिः॑ । अ॒स्माकं॑ भूत्ववि॒ता त॒नूना॑म् । आप्ल॑वस्व॒ प्रप्ल॑वस्व । आ॒ण्डीभ॑व ज॒ मा मुहुः । सुखादीन्दुः॑ख-नि॒धनाम् । प्रतिमुञ्चस्व॒ स्वां पु॒र॑म् ॥ ११४ ॥

मरी॑चयस्स्वायंभु॒वाः । ये श॑री॒राण्य॑कल्पयन् । ते ते॑ दे॒हङ्क॑ल्पयन्तु । मा च॑ ते॒ख्यास्म॑तीरिषत् । उत्ति॑ष्ठत॒ मा स्व॑प्त । अ॒ग्निमि॑च्छध्वं॒ भार॑ताः । राज्ञ॒स्सोम॑स्य तृ॒प्तास॑ः । सूर्ये॑ण स॒युजो॑षसः । यु॒वा॑ सु॒वासा॑ः । अ॒ष्टाच॑क्रा नव॑द्वारा ॥

दे॒वाना॒ं पूर॑यो॒ध्या । तस्या॑ꣳहिरण्म॑यः को॒शः । स्व॒र्गो लो॒को ज्योति॒षाऽऽवृ॑तः । यो वै तां ब्रह्म॑णो वे॒द । अ॒मृते॑नाऽऽवृ॒तां पु॑रीम् । तस्मै॑ ब्रह्म च॑ ब्र॒ह्मा च । आ॒युः की॒र्तिं प्र॒जान्द॑दुः । वि॒भ्राज॑माना॒ꣳहरि॑णीम् । य॒शसा॑ संप॒रीवृ॑ताम् । पुर॑ꣳहिरण्म॑यीं ब्र॒ह्मा ॥ ११६ ॥

विवेशाॅपराॅजिता । पराडेत्यॅज्यामयी । पराडेत्यॅनाशकी । इह चॉमुत्रॅ चान्वेति । विद्वान्देॅवासुराॅनुभयान् । यत्कुॅमारी मन्द्रयॅते । यद्योषिद्यत्पॅतिव्रता । अरिष्टं यत्किॅञ्च क्रियतेॅ । अग्निस्तदॅनुवेधति । अभृताॅसश्शृॅतासश्च ॥ ११७ ॥

यज्वानो येऽप्ययॅज्वनॅः । स्वर्यन्तो नापेॅक्षन्ते । इन्द्रॅमग्निश्च ये विदुः । सिकॅता इव संयन्ति । रश्मिभिस्समुॅदीरिताः । अस्माल्लोकादॅमुष्माच्च । ऋषिॅभिरदात्पृश्निभिः । अपेॅत वीत वि चॅ सर्पतातॅः । येऽत्र स्थ पुराणा ये च नूतॅनाः । अहोॅभिरद्भिरक्तुभिर्व्यॅक्तम् ॥ ११८ ॥

यमो दॅदात्ववसानॅमस्मै । नृ शृॅणन्तु नृ पात्वर्यॅः । अकृष्टा ये च कृष्टॅजाः । कुमारीॅषु कनीनीॅषु । जारिणीॅषु च ये हिताः । रेतॅःपीता आण्डॅपीताः । अङ्गाॅरेषु च ये हुताः । उभयान्न् पुत्रपौत्रकान् । युवेऽहं यमराजॅगान् । शतमिन्नु शरदॅः ॥ ११९ ॥

अद्रो यद्भ्रं विलबम् । पितॄणाञ्च यमस्य च । वरुणस्याश्विनोरग्नेः । मरुताञ्च विहायसाम् । कामप्रयवणं मे अस्तु । स ह्येवासि सनातनः । इति नाको ब्रह्मिश्रवो रायो धनम् । पुत्रानापो देवीरिहाऽऽहिता ॥ १२० ॥

श्रीछायासुवर्चलांबासमेत श्रीसूर्यनारायणस्वामिने नमः ।
ओं नमो नारायणाय ॥ २७ ॥

विशीर्ष्णीं गृध्रशीर्ष्णीञ्च । अपेतो निरृतिꣳ हथः । परिबाधꣳ श्वेतकुक्षम् । निजङ्घꣳ शबलोदरम् । स तान् वाच्यायया सह । अग्ने नाशय सन्दृशः । ईर्ष्यासूये बुभुक्षाम् । मन्युं कृत्याञ्च दीधिरे । रथेन किꣳशुकावता । अग्ने नाशय सन्दृशः ॥ १२१ ॥

श्रीछायासुवर्चलांबासमेत श्रीसूर्यनारायणस्वामिने नमः ।
ओं नमो नारायणाय ॥ २८ ॥

पर्जन्याय प्रगायत । दिवस्पुत्राय मीढुषे । स नो यवसमिच्छतु । इदं वचः पर्जन्याय स्वराजे । हृदो अस्त्वन्तरन्तद्युयोत । मयोभूर्वातो विश्वकृष्टयस्सन्त्वस्मे । सुपिप्पला

ओषधीर्देवगोपाः। यो गर्भमोषधीनाम्। गवाङ्कृणोत्यर्वताम्। पुर्जन्यः पुरुषीणाम् ॥ १२२ ॥

श्रीछायासुवर्चलांबासमेत श्रीसूर्यनारायणस्वामिने नमः।
ओं नमो नारायणाय ॥ २९ ॥

पुनर्मामैत्विन्द्रियम्। पुनरायुः पुनर्भगः। पुनर्ब्राह्मणमैतु मा। पुनर्द्रविणमैतु मा। यन्मेऽद्य रेतः पृथिवीमस्कान्। यदोषधीरप्यसरद्यदापः। इदन्तत्पुनरादंदे। दीर्घायुत्वाय वर्चसे। यन्मे रेतः प्रसिच्यते। यन्म आजायते पुनः। तेन माममृतङ्कुरु। तेन सुप्रजसङ्कुरु ॥ १२३ ॥

श्रीछायासुवर्चलांबासमेत श्रीसूर्यनारायणस्वामिने नमः।
ओं नमो नारायणाय ॥ ३० ॥

अद्भ्यस्तिरोधाऽजायत। तव वैश्रवणस्सदा। तिरोधेहि सपत्नान्नः। ये अपोऽश्नन्ति केचन। त्वाष्ट्रीं मायां वैश्रवणः। रथꣳ सहस्रवन्धुरम्। पुरुश्चक्रꣳ सहस्राश्वम्। आस्थायायाहि नो बलिम्। यस्मै भूतानि बलिमावहन्ति। धनङ्गावो हस्तिहिरण्यमश्वान् ॥ १२४ ॥

असॉम सुमतौ यज्ञियॅस्य । श्रियं बिभ्रतोऽन्नॅमुखीं विराजम् । सुदर्शने चॅ क्रौञ्चे चॅ । मैनागे चॅ महागिरौ । सतद्वाड्डारॅगमन्ता । सꣳहार्यन्नगॅरं तवॅ । इति मन्त्राः । कल्पोऽत ऊर्ध्वम् । यदि बलिꣳ हरॅत् । हिरण्यनाभयॅ वितुदयॅ कौबेरायायं बॅलिः ॥ १२५ ॥

सर्वभूताधिपतये नॅम इति । अथ बलिꣳ हृत्वोपॅतिष्ठेत । क्षत्रं क्षत्रं वैश्रवणः । ब्राह्मणॉ वयꣳ स्मः । नमॅस्ते अस्तु मा मॉ हिꣳसीः । अस्मात्प्रविश्यान्नमद्धीति । अथ तमग्निमॉदधीत । यस्मिन्नेतत्कर्म प्रॅयुञ्जीत । तिरोधा भूः । तिरोधा भुवॅः ॥

तिरोधास्स्वॅः । तिरोधा भूर्भुवस्स्वः । सर्वेषां लोकाना-माधिपत्यॅ सीदेति । अथ तमग्निमिन्धीत । यस्मिन्नेतत्कर्म प्रॅयुञ्जीत । तिरोधा भूस्स्वाहा । तिरोधा भुवस्स्वाहा । तिरोधास्स्वॅस्स्वाहा । तिरोधा भूर्भुवस्स्वॅस्स्वाहा । यस्मिन्नस्य काले सर्वा आहुतीर्हुतॉ भवेयुः ॥ १२७ ॥

अपि ब्राह्मणमुखीनाः। तस्मिन्नह्नः काले प्रयुञ्जीत। परस्सुप्तजनाद्वेपि। मास्म प्रमाद्यन्तमाध्यापयेत्। सर्वार्थाः सिद्ध्यन्ते। य एवं वेद। क्षुध्यन्निदमजानताम्। सर्वार्था न सिद्ध्यन्ते। यस्ते विघातुको भ्राता। ममान्तर्हृदये श्रितः॥

तस्मा इममग्रपिण्डञ्जुहोमि। समेऽर्थान्मा विवधीत्। मयि स्वाहा। राजाधिराजाय प्रसह्यसाहिने। नमो वयं वैश्रवणाय कुर्महे। स मे कामान्कामकामाय मह्यम्। कामेश्वरो वैश्रवणो ददातु। कुबेराय वैश्रवणाय। महाराजाय नमः। केतवो अरुणासश्च। ऋषयो वातरशनाः। प्रतिष्ठाꣳशतधा हि। समाहितासो सहस्रधायसम्। शिवा नश्शन्तमा भवन्तु। दिव्या आप ओषधयः। सुमृडीका सरस्वति। मा ते व्योमसन्दृशि॥ १२९॥

श्रीछायासुवर्चलांबासमेत श्री सूर्यनारायणस्वामिने नमः।

ओं नमो नारायणाय॥ ३१॥

संवथ्सरमेतद्व्रतञ्चरेत्। द्वौ वा मासौ। नियमस्समासेन। तस्मिन्नियमविशेषाः। त्रिषवणमुदकोपस्पर्शी। चतुर्थ-

कालपानॅभक्तुस्स्यात् । अहरहर्वा भैॅक्षमश्नीयात् । औदुंबरीभिः समिद्भिरग्ँनि पग्िचरेत् । पुनर्मामैत्त्विन्द्रियमित्येतेनाऽनुवाकेन । उद्धृतपरिपूताभिरद्भिः कार्यङ्कुर्वीत ॥ १३० ॥

अॅसञ्चयवान् । अग्नये वायवे सूर्याय । ब्रह्मणे प्रॅजा-पतये । चन्द्रमसे नॅक्षत्रेभ्यः । ऋतुभ्यस्संवॅथ्सराय । वरुणायाऽ-रुणायेति व्रॅतहोमाः । प्रवर्ग्यॅवदादेशः । अरुणाः काण्डऋषयः । अरण्येऽधीयीरन् । भद्रङ्कर्णेभिरिति द्वे जपित्वा ॥ १३१ ॥

महानाम्नीभिरुदकँ्सँ्स्पृश्यं । तमाचार्यो दद्यात् । शिवा नश्शन्तमेत्योषधीरालभते । सुमृडीकेति भूमिम् । एव-मॅपवर्गे । धेनुर्दक्षिणा । कँ्सं वासॅश्च क्षौमम् । अन्यॅद्वा शुक्लम् । यॅथाशक्ति वा । एवँ्स्वाध्यायॅधर्मेण । अरण्ये-ऽधीयीत । तपस्वी पुण्यो भवति तपस्वी पुॅण्यो भवति ॥ १३२ ॥

श्रीछायासुवर्चलांबासमेत श्रीसूर्यनारायणस्वामिने नमः ।

ओं नमो नारायणाय ॥ ३२ ॥

भद्रं कर्णेभिः शृणुयाम देवाः। भद्रं पश्येमाऽक्षभिर्यजत्राः। स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिः। व्यशेम देवहितं यदायुः। स्वस्ति न इन्द्रो वृद्धश्रवाः। स्वस्ति नः पूषा विश्ववेदाः। स्वस्तिनस्ताक्ष्र्यो अरिष्टनेमिः। स्वस्ति नो बृहस्पतिर्दधातु॥

॥ ओं शान्तिः शान्तिः शान्तिः॥

---

भानो भास्कर मार्ताण्ड चण्डरश्मे दिवाकर।
आयुरारोग्यमैश्वर्यं श्रियं पुत्रांश्च देहि मे॥

धृतपद्मद्वयं भानुं तेजोमण्डलमध्यगम्।
सर्वाधिव्याधिशमनं छायाश्लिष्टतनुं भजे॥

सौरमण्डलमध्यस्थं साम्बं संसारभेषजम्।
नीलग्रीवं विरूपाक्षं नमामि शिवमव्ययम्॥

—:x:—

॥ श्रीः ॥

# ॥ नवग्रहनमस्कारमन्त्रपाठः ॥

शुक्लांबरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥

ओं भूः, ओं भुवः, ओँ॒ सुवः, ओं महः, ओं जनः, ओं तपः, ओँ॒ स॒त्यम् । ओं, तत्स॑वि॒तुर्वरे॑ण्यं॒ भर्गो॑ दे॒वस्य॑ धीमहि । धियो॒ यो नः॑ प्रचो॒दया॑त् । ओमापो॒ ज्योती॒-रसो॒ऽमृतं॒ ब्रह्म॒ भूर्भुव॒स्सुव॒रोम् ॥

ममोपात्तसमस्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं आदित्यादि नवग्रहदेवता प्रसादसिद्ध्यर्थं आदित्यादि नवग्रहनमस्कारान् करिष्ये ॥ (इति संकल्प्य)

ओं आ स॒त्येन॒ रज॑सा॒ वर्त॑मानो निवे॒शय॑न्न॒मृतं॒ मर्त्य॑ञ्च । हि॒र॒ण्यये॑न सवि॒ता रथे॒नाऽऽदे॒वो या॑ति॒ भुव॑ना वि॒पश्य॑न् ॥ अ॒ग्निं दू॒तं वृ॑णीमहे॒ होता॑रं वि॒श्ववे॑दसम् ॥ अ॒स्य य॒ज्ञस्य॑ सु॒क्रतु॑म् ॥ येषा॒मीशे॑ पशु॒पतिः॑ पशू॒नां चतु॑ष्पदामु॒त च॑ द्वि॒पदा॑म् । निष्क्री॑तो॒-ऽयं य॒ज्ञियं॑ भा॒गमे॑तु रा॒यस्पोषा॒ यज॑मानस्य सन्तु ॥ ओं

अधिदेवता प्रत्यधिदेवता सहिताय आदित्याय नमः ॥ १ ॥

ओं, अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम्। अपाँ रेताँसि जिन्वति ॥ स्योना पृथिवि भवाऽनृक्षरा निवेशनी। यच्छानश्शर्म सप्रथाः। क्षेत्रस्य पतिना वयँहितेनेव जयामसि। गामश्वं पोषयित्न्वा स नो मृडातीदृशे ॥ ओं अधिदेवता प्रत्यधिदेवता सहिताय अङ्गारकाय नमः ॥ २ ॥

ओं, प्रवश्शुक्राय भानवे भरध्वँ हव्यं मतिञ्चाग्नये सुपूतम्। यो दैव्यानि मानुषा जनूँष्यन्तर्विश्वानि विद्म ना जिगाति। इन्द्राणीमासु नारिषु सुपत्नीमहमश्रवम्। न ह्यस्या अपरञ्चन जरसा मरते पतिः। इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः। अस्माकमस्तु केवलः ॥ ओं अधिदेवता प्रत्यधिदेवता सहिताय शुक्राय नमः ॥ ३ ॥

ओं, आप्यायस्व समेतु ते विश्वतस्सोम वृष्णियम्। भवा वाजस्य संगथे ॥ अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा। अग्निञ्च विश्वशंभुवमापश्च विश्वभेषजीः ॥ गौरी

मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी। अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन्॥ ओं, अधिदेवता प्रत्यधिदेवता सहिताय सोमाय नमः॥ ४॥

ओं, उद्बुध्यस्वाग्ने प्रतिजागृह्येनमिष्टापूर्ते सꣳसृजेथामयञ्च। पुनः कृण्वꣳस्त्वा पितरं युवानमन्वाताꣳसीत्त्वयि तन्तुमेतम्॥ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पाꣳसुरे॥ विष्णो रराटमसि विष्णोः पृष्ठमसि विष्णोश्श्नप्त्रेस्थो विष्णोस्स्यूरसि विष्णोर्ध्रुवमसि वैष्णवमसि विष्णवे त्वा॥ ओं अधिदेवता प्रत्यधिदेवता सहिताय बुधाय नमः॥ ५॥

ओं, बृहस्पते अतियदर्यो अर्हाद्द्युमद्विभाति क्रतुमज्जनेषु। यद्दीदयच्छवसर्तप्रजात तदस्मासु द्रविणन्धेहि चित्रम्। इन्द्रमरुत्व इह पाहि सोमं यथा शार्याते अपिबस्सुतस्य। तव प्रणीती तव शूरशर्मन्नाविवासन्ति कवयस्सुयज्ञाः॥ ब्रह्मजज्ञानं प्रथमं पुरस्ताद्विसीमतस्सुरुचो वेन आवः। सबुध्निया उपमा

अस्य विष्ठास्सतश्च योनिमसँतश्च विवँः ॥ ओं, अधिदेवता प्रत्यधिदेवता सहिताय बृहस्पतये नमः ॥ ६ ॥

ओं, शन्नो देवीरभिष्टय आपो भवन्तु पीतयें । शंयोरभिस्रॅवन्तु नः ॥ प्रजॉपते न त्वदेतान्यन्यो विश्वॉ जातानि परिता बॅभूव । यत्कॉमास्ते जुहुमस्तन्नों अस्तु वयङ् स्यॉम पतॅयो रयीणाम् ॥ इमं यॅमप्रस्तरमाहि सीदाङ्गिरोभिः पितृभिस्संविदानः । आत्वा मन्त्राः कविशस्ता वॅहन्त्वेना रॉजन् हविषॉ मादयस्व ॥ ओं, अधिदेवता प्रत्यधिदेवता सहिताय शनैश्चराय नमः ॥ ७ ॥

कयॉ नश्चित्र आभुॅवदूती सदावृॅधस्सखा । कया शचिष्ठया वृता ॥ आऽयङ्गौः पृश्निरक्रमीदसॅनन्मातरं पुनॅः । पितरॅञ्च प्रयन्थ्सुवॅः ॥ यत्ते देवी निरृतिराबबन्ध दामॅ ग्रीवास्वॅविचर्त्यम् । इदन्ते तद्विष्याम्यायुॅषो न मध्यादथॉजीवः पितुमॅद्धि प्रमुॅक्तः । ओं, अधिदेवता प्रत्यधिदेवता सहिताय राहवे नमः ॥ ८ ॥

ओं, केतुङ्कृण्वन्नकेतवे पेशो मर्या अपेशसे। समुषद्भि-रजायथाः॥ ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम्। श्येनो गृध्राणाᳬ स्वधितिर्वनानाᳬ सोमः पवित्र-मत्येति रेभन्॥ सचित्रचित्रं चितयन्तमस्मे चित्रक्षत्र चित्रतमं वयोधाम्। चन्द्रᳬरयिं पुरुवीरं बृहन्तं चन्द्रचन्द्राभिर्गृणते युवस्व॥ ओं, अधिदेवता प्रत्यधिदेवता सहितेभ्यः केतुभ्यो नमः॥ ९॥

॥ ओं आदित्यादिनवग्रहदेवताभ्यो नमो नमः॥

॥ नवग्रहनमस्कारमन्त्रपाठस्संपूर्णः॥

---

सूर्याय शीतरुचये धरणीसुताय
सौम्याय देवगुरवे भृगुनन्दनाय।
सूर्यात्मजाय भुजगाय च केतवे च
नित्यं नमो भगवते गुरवे वराय॥

ध्यायेत्सूर्यमनन्तशक्तिकिरणं तेजोऽमलं भास्करं
भक्तानामभयप्रदं दिनकरं ज्योतिर्मयं शङ्करम् ।
आदित्यं जगदीशमच्युतमजं त्रैलोक्यचूडामणिं
भक्ताभीष्टवरप्रदं दिनमणिं मार्ताण्डमाद्यं शुभम् ॥

जपाकुसुमसंकाशं काश्यपेयं महाद्युतिम् ।
तमोरिं सर्वपापघ्नं प्रणतोस्मि दिवाकरम् ॥

सप्ताश्वरथमारूढं प्रचण्डं कश्यपात्मजम् ।
श्वेतपद्मधरं देवं तं सूर्यं प्रणमाम्यहम् ॥

ब्रह्मस्वरूप उदये मध्याह्ने तु महेश्वरः ।
अस्तकाले स्वयं विष्णुः त्रयीमूर्तिर्दिवाकरः ॥

पद्मासनः पद्मकरो द्विबाहुः पद्मद्युतिः सप्ततुरङ्गवाहः ।
दिवाकरो लोकगुरुः किरीटी मयि प्रसादं विदधातु देवः ॥

शिवरूपाज्ज्ञानमहं त्वत्तो मुक्तिं जनार्दनाकारात् ।
शिखिरूपाच्चैश्वर्यं भवतश्चारोग्यमिच्छामि ॥

त्वं शरणं त्वं माता त्वं पिता त्वं धनं त्वमाचार्यः ।
त्वं भर्ता त्वं हर्ता विपदामर्क प्रसीद मम ॥

—:x:—

# Sri Vani Vilas Stotra Series.

## By Sri Sankarabhagavatpada

| | | | |
|---|---|---|---|
| सौन्दर्यलहरी Soundarya Lahari | | 0 | 25 |
| शिवानन्दलहरी Sivananda Lahari | | 0 | 25 |
| अर्धनारीश्वरस्तोत्रम् Ardhanareeswara Stotras | | 0 | 16 |
| त्रिपुरसुन्दरीस्तोत्राणि Tripurasundari Stotras | | 0 | 40 |
| त्रिपुरसुन्दरीवेदपादस्तवः | | 0 | 16 |
| भुजङ्गस्तोत्राणि Bhujanga Stotras | | 0 | 40 |

## By the Late Sri Jagadguru Of Sringeri

| | | | |
|---|---|---|---|
| शारदास्तोत्राणि Sarada Stotras | | 0 | 25 |
| लघुस्तोत्राणि Miscellaneous Stotras Part I | ,, | 0 | 16 |
| Do. Do. Part II | | | |
| सदाशिवेन्द्रस्तुति. Sadasivendrastuti | | | |

## By Tiruvisanallur Ayyaval

| | | | |
|---|---|---|---|
| आख्याषष्टिः शिवभक्तिकल्पलतिका च Akhyashashti & Sivabhaktikalpalatika | | 0 | 16 |

## By Muka Kavi

| | | | |
|---|---|---|---|
| मूकपञ्चशती Muka Panchasathi | | 1 | 50 |
| आर्याशतकम् Aryasatakam | (Under Reprint) | | |
| पादारविन्दशतकम् Padaravindasatakam | | | |
| स्तुतिशतकम् Stutisatakam | | | |
| कटाक्षशतकम् Katakshasatakam | | | |
| मन्दस्मितशतकम् Mandasmitasatakam | | | |

## By Sri Appaya Dikshita.

| | | | |
|---|---|---|---|
| वरदराजस्तवः Varadarajastava | | 0 | 16 |
| लघुस्तोत्राणि दुर्गाचन्द्रकलास्तुतिः, आत्मार्पणस्तुतिः, मानसोल्लासः, अपीत कुचाम्बास्तवश्च Minor Stotras | | 0 | 20 |

## By Sri Nilakantha Dikshita.

| | | |
|---|---|---|
| रघुवीरस्तवः चण्डीरहस्यं च Raghuvirastava & Chandirahasya | | |
| आनन्दसागरस्तवः Anandasagarastava | 0 | 16 |

## By Sage Durvasa.

| | | |
|---|---|---|
| महिम्नस्तोत्रम् Mahimna Stotras | 0 | 20 |
| ललितास्तवरत्नम् (आर्याद्विशती) Lalitastavaratnam | 0 | 16 |

## By Sri Vedantha Desika.

| | | |
|---|---|---|
| वेदान्तदेशिकस्तोत्राणि प्रथमो भागः Stotras Part I | 0 | 20 |
| " द्वितीयो भागः " Part II | 0 | 20 |
| " तृतीयो भागः " Part III | 0 | 20 |
| दयाशतकम् Dayasatakam | 0 | 16 |

## By Others.

| | | |
|---|---|---|
| इन्द्राक्षीस्तोत्रम् शिवकवचं च Indrakshi & Sivakavacha | 0 | 20 |
| आशीर्वादशतकम् Asirvadasatakam By Kutti Kavi | 0 | 16 |
| गीतगोविन्दम् Gita-Govindam Parts 1 & 2 By Jayadeva | | 45 |
| गीतसुन्दरम् Gitasundaram Parts I & II By Sadasiva | 0 | 32 |
| आर्यास्तवराजः Aryastavaraja By Jagannatha | 0 | 16 |
| चिन्तामणिस्तवः Chintamanistava | 0 | 16 |
| सुभगोदयस्तुतिः Subhagodayastuti By Sri Gaudapada | 0 | 16 |
| चिद्विलास मकरन्दस्तोत्रम् Chidvilasa & Makarandastotram | 0 | 16 |
| मुकुन्दमाला Mukundamala | 0 | 20 |
| गुरुपरम्परास्तोत्रम् GURUPARAMPARA STOTRAS | 0 | 25 |

கிடைக்குமிடம் :—

ஸ்ரீ வாணீ விலாஸ் பிரஸ், ஸ்ரீரங்கம், திருச்சி—6.